विद्यारण्यविद्यापीठ–प्रथमग्रन्थः

Vidyaranya-Vidya-Pitha
PUBLICATION No. I

श्रीविद्यारण्यविरचितः

# ब्रह्मविदाशीर्वादः

# BRAHMAVIDĀŚĪRVĀDAḤ

OF ŚRĪ VIDYĀRAṆYA




*Published by*
VIDYĀRAṆYA VIDYĀPĪTHA TRUST HAMPI

1981

विद्यारण्यविद्यापीठ–प्रथमग्रन्थः

Vidyaranya-Vidya-Pitha

PUBLICATION No. I

श्रीविद्यारण्यविरचितः

# ब्रह्मविदाशीर्वादः

# BRAHMAVIDĀŚĪRVĀDAḤ

OF ŚRĪ VIDYĀRAṆYA

*Published by*

VIDYĀRAṆYA VIDYĀPĪTHA TRUST HAMPI

1981

श्रीगुरुभ्यो नमः

# उपोद्घातः

श्रुतिस्मृतिपुराणानामालयं करुणालयम् ।
नमामि भगवत्पादशङ्करं लोकशङ्करम् ॥

विद्यातीर्थाच्छङ्करानन्दपादाल्लब्धप्रज्ञं भारतीतीर्थपादात् ।
ब्रह्म ग्रन्थैर्वेदयन्तं यतीन्द्रं विद्यारण्यं देशिकं तं नमामः ॥

सर्वतन्त्रस्वतन्त्राः परिव्राजकवरेण्या विद्यारण्यस्वामिनो ब्रह्मविदां महापुरुषाणां संश्रयं तेषामाशिषश्च ब्रह्मविद्याधिगमे हेतुं पश्यन्तः, महतां ब्रह्मविदां चरणेषु प्रणिपत्य तेषां सन्निधौ ब्रह्म जिज्ञासुना प्रार्थनारूपेण विज्ञाप्यं सर्वं संगृहीतवन्तो **ब्रह्मविदाशीर्वादाख्ये** अस्मिन् लघुनि प्रबन्धे ब्रह्म विविदिषूणामुपकाराय ।

"बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते" इत्याह श्रीभगवान् गीताचार्यः । बहुसंख्याकजननमात्रेण नेदं ब्रह्मज्ञानं साधयितुं शक्यते । तत्तादृशासंख्याकजनिमृत्यन्तरालगतसमयभूतानामायुषां निरन्तरालं ज्ञानाधिगमैकपरतय यापनेन, महापुरुषसंश्रयेण, दैवानुग्रहेण च ज्ञानं सिध्यति, तेन भगवत्प्रपत्तिश्च ।

तथा आयुर्यापनसमये अवलम्बनीया उपायाः के? मार्गः क आश्रयणीयः? मार्गमध्ये कानि कानि निष्ठानानि सिद्ध्येरन्, येन सुपथगमनं तदिति निश्चीयेत? अपसार्याः कण्टकाः के? के तत्र उपकुर्युः? के तत्र प्रतिहन्युः? मार्ग उपकुर्वतां साहाय्यं कथमादेयम्? प्रतिघातिनां उत्सारणं च कथम्? लक्ष्य किम्? लक्ष्याभासतया पुरोभूय चित्तं विमोह्य लक्ष्यात् के के च्यावयेयुः? के के संशया मध्ये मध्ये उत्तिष्ठेयुः? कथं ते परिहार्याः? इत्येवं वेद्यकोटौ बहवोऽन्तर्भवन्ति । विदितेष्वपि परिहार्याणां काले परिहरणे, उपादेयानामुचितया रीत्या उपादाने च, देशिकरूपेण दर्शिताभ्युदयो भगवानेव शरणीकरणीयो भवति ।

अनादिना संसारेणाहितानां उद्भूतानामनुद्भूतानां च वासनानां आचार्यानुग्रहावलम्बमात्रेण क्षपणात्, अनारतं सद्वासनाभ्यसनाच्च दृढे शान्ते चित्ते, दृढगृहीतायां च विद्यायां अवभासते स्वयमेव तद् वेद्यं ब्रह्म ।

एतत्सर्वं पौरुषप्रयत्नमात्रासाध्यं विजानन् विद्वान् श्रेयसे सिद्धये, नावमिव तितीर्षुः, ब्रह्मविदामाशीर्वादान् अवलम्बते शरणमिति । अतिकुशलो हि ब्रह्म यो जिज्ञासति । अतो हेयोपादेयविवेकचतुरः ब्रह्मैव ब्रह्मविद्रूपेण प्रणतायाभ्युदयं दित्सु चरतीति दृढनिश्चयः, तेभ्यो ब्रह्मविद्भ्यः एता आशिषः सुसम्पन्नाः प्रतीक्षते ।

विद्यारण्यस्वामिनश्च कृपया, साधकमतिदौर्बल्यं जानन्तः, प्रार्थनीयाः के इत्यपि ते न जानीयुरिति धिया,ताननुजिघृक्षुः ब्रह्मविदाशीर्वादनामकं ग्रन्थं तदर्थसङ्ग्रहपरं निरमासुः । असकृदस्यानुसन्धानेन विविदिषां साधनसम्पत्तिञ्च प्राप्य ब्रह्मवेदने बद्धश्रद्धाः सिद्धिं विन्देम गुरुकृपाबलादिति शम् ।

श्रीगुरुभ्यो नमः

शि. वे. राधाकृष्ण शास्त्री.

## PREFACE

### SALUTATIONS TO THE LOTUS FEET OF ŚRĪ VIDYĀRANYA!

This very succint work entitled, 'Brahmavidāśirvādaḥ'—perhaps the smallest of Vidyaranya's productions—has been brought out, fittingly, as the first of a series of publications of the invaluable works of Sage Vidyāraṇya, proposed to be published by the recently started Vidyāraṇya Vidya Pītha, Hospet. Moreover it is a matter for jubilation to know that this first publication, being of a benedictory nature, is to be sent to all scholars, all over the country.

The quintessence of the precept of Advaita has been reduced to the form of blessings in this small work by Śrī Vidyāraṇya. What all that one interested in attaining knowledge of the Brahman should try to achieve and with what kind of effort have been indicated in this Āśirvādapaddati. Altogether the paddhati contains fifty-three gems of blessings. The opening benediction vouchsafes on the seeker for knowledge, the ideal of a continued steadfast understanding of the identity of the individual soul with that Single Paramatman, (Caitanya) pervading through everything from 'Hiranyagarbha' down to static objects. The last āśirvāda purports to indicate that the idea that everything (with form or taste) in this illusory universe is untrue, should get strengthened.

Though the entire work is in the nature of blessings, the real content behind is an epitomisation of the path to be followed for the realisation of the Supreme Spirit and that too by one who has visualised the Brahman. No doubt the Bhagavad Gītā and other philosophic treatises have clearly vivified that only after a number of births in this mundane world one can get deliverance. On what should one concentrate, what path he should take, what he

must discard—all these should be decided upon with discerning knowledge. When and where such decision and discerning are difficult to be accomplished, the blessings of the great come in as aid. Knowing fully well the limitations and shortcomings of the human mind and also the deficiencies likely to creep in human endeavour, especially in the attainment of the knowledge of the Brahman, the learned seek for the blessings of the great souls and take refuge therein. And those fortunate in acquiring such blessings are bound to reach the cherished goal. Sage Vidyāraṇya has finely put in a nutshell, in this succinct work, pearls of wisdom for the one striving to attain a proper perspective of of the Supreme.

It may be said that the Vidyāraṇya Vidya Pītha has done a singular service to our country and our ancient culture and philosophy with the publication of this shortest work of the great sage, the blessings of a great Brahmavid.

—A Devotee

॥ श्रीः ॥

# अद्वैतविचारः

## १ श्रीमत्परमहंसपरिव्राजकश्रीविद्यारण्यमुनिभ्यो नमः ।

श्रीमत्परमहंसपरिव्राजक-श्रीविद्यारण्यस्वामिविरचितः श्रीब्रह्मविदाशीर्वादः । अस्मिन्नाशीर्वादात्मके ग्रन्थे 'केनापि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि' इति वचनानुसारेण केनापि प्रेरितोऽहं निबन्धलेखने प्रयत्नं करोमि।

श्रीविद्यारण्यमुनीनां सर्वशास्त्रेषु गाढं स्वच्छं च पाण्डित्यमासीत् । तेषां ग्रन्थानामवलोकनेनेदं ज्ञायते यत्तेषां तत्त्वबोधः करतलस्थितामलकवत् निर्मल आसीत् । तेषां ग्रन्थाः सुलभतया बोधं जनयन्ति । विरलैव ग्रन्थसरणिरेतादृशी । अधोनिर्दिष्टास्तेषां ग्रन्थाः - व्याकरणे माधवीयधातुवृत्तिः । मीमांसायां जैमिनीयन्यायमाला । स्मृतिषु - पराशरसंहितायां पराशरमाधवः कालमाधवश्च निबन्धौ । दर्शनेषु - सर्वदर्शनसंग्रहः । काव्येषु - शांकरदिग्विजयः पुराणेषु - स्कंदपुराणान्तर्गतसूतसंहिताया अद्वैततत्वदर्शनपटीयसी विशदटीका । वेदान्तेषु-विवरणप्रमेयसंग्रहः, बृहदारण्यकवार्तिकसारः, पंचदशी, जीवन्मुक्तिविवेकः, अनुभूतिप्रकाशः अपरोक्षानुभूतिटीका, ऐतरेयोपनिषद्दीपिका छान्दोग्योपनिषद्दीपिका चेति तैः प्रणीता ग्रंथाः ।

वेदान्ते पंचदशी प्रसिद्धैव । अस्मिन् ग्रन्थे पंचदशप्रकरणैः मुमुक्षूणाम् यद्यदावश्यकं तत्सर्वं प्रतिपादितम् । अयं नित्यं अभ्यसनीयो ग्रन्थः । तत्र प्रथमे तत्त्वविवेकप्रकरणे, संविद् एका सर्वत्रानुस्यूतत्वात् , नास्ति तस्याः प्रागभाव-

प्रतियोगित्वं नापि ध्वंसप्रतियोगित्वं इति सा नित्या । संविदः साधननिरपेक्ष-प्रत्यक्षत्वात् स्वप्रकाशत्वम् । आत्मनोऽपि स्वप्रकाशत्वं नित्यत्वं चेति संविदात्मनो-रेकलक्षणत्वाद् भिन्नलक्षणत्वाभावाच्च तयोरैक्यम् । घटपटयोर्गंधवत्त्वरूपैक-लक्षणवत्त्वेऽपि भिन्नलक्षणसत्वात् तयोर्भेदः । अत्र तु संविदात्मनोर्भिन्नलक्षणत्वा-भावात् तयोरैक्यम ।

आत्मा तावदानन्दस्वरूपः 'सच्चिदानंदो ब्रह्म' इति श्रुतेः । आत्मनः परमप्रेमास्पदत्वेन आनन्दरूपत्वं युक्त्याऽपि सिध्यति । तत्र अयं प्रयोगः, आत्मा परमानन्दरूपः परप्रेमास्पदत्वात् । यन्नैवं तन्नैवं यथा घट इति ।

'अयमात्मा ब्रह्म, तत्त्वमसि, अहं ब्रह्मास्मि' इत्यादिश्रुतिभिर्जीवब्रह्मणोः ऐक्यं प्रतिपादितम् । तत्र किंचिद्विचार्यते ।

जीवः अहं सुखी, अहं दुःखी, अहं कर्ता, अहं भोक्ता, अहं मरणधर्मा इति सर्वेषां आगोपालानामनुभवः । अतः जीवब्रह्मणोः श्रुतिप्रतिपादितमैक्यं कथं संभवति ?

उच्यते । 'सच्चिदानन्दं ब्रह्म, ब्रह्मणः यन्मायायां प्रतिबिंबम्, स ईश्वरः, तस्यैव च मायाकार्येऽन्तःकरणे यत्प्रतिबिंबम्, स जीवः । अयं बिंबप्रतिबिंब-भावः 'रूपं रूपं प्रतिरूपो बभूव' इति श्रुतौ अपि श्रूयते । बिंबस्य केचन गुणाः प्रतिबिंबेऽपि आगच्छन्ति इति प्रसिद्धम् । यथा सूर्यस्य दर्पणस्थप्रतिबिंबे प्रकाशकत्वादिकम् । प्रतिबिंबे तावत् उपाधिधर्मा अपि आगच्छन्ति यथा दर्पणस्थप्रतिबिंबे चलनादिकम् । तथा ब्रह्मप्रतिबिंबरूपे जीवेऽपि कर्तृत्वं भोक्तृत्वं,

सुखित्वं दुःखित्वं चेत्यादयः । उपाधिभेदेन च जीवानां प्रतिबिंबरूपाणां भिन्नत्वमपि उपपद्यते । बिंबप्रतिबिंबयोरैक्यम् सर्वे जानन्त्येव । अतः प्रतिबिंबरूपस्य जीवस्य बिंबरूपस्य ब्रह्मणश्च ऐक्यं न युक्तिविरुद्धम् । परं तु अनाद्यविद्यया जातो यस्तादात्म्याध्यासः परस्परधर्माध्यासश्च तस्य निवृत्त्यनन्तरं वास्तविकं स्वस्वरूपज्ञानं 'तत्त्वमसि अहं ब्रह्मास्मि' इत्यादिवाक्यैर्भवत्येव ।

परन्तु अत्र प्रतिबिंबवादे केचन प्रत्यवतिष्ठंते । लोके तावत् निर्गुण-निर्विकारस्य प्रतिबिंबं न दृश्यते । अपि तु सगुणस्य सरूपस्यैव प्रतिबिंबं दृश्यते । इति युष्माकं बिंबप्रतिबिंबकल्पना अनुभवविरुद्धा । इति चेन्न । लोके नीरूपस्य रूपस्य, नीरूपस्य आकाशस्य प्रतिबिंबदर्शनात् । इति आपातरमणीयत्वात् शंकायाः अनाद्यविद्यया जातस्याध्यासस्य निवृत्तये किमपि साधनं नास्ति । तस्य अनादित्वात् भ्रमनिवर्तकाभावेन च चंद्रप्रादेशिकभ्रमवत् शास्त्रेणापि न निवर्तेत । 'अहं सुखी अहं कर्ता अहं दुःखीइति जीवस्य वास्तविकं स्वरूपमेव । अत एव न कोऽपि तादृशवाक्यज्ञानेन परमानंदवान् दृश्यते । संदिग्धं सप्रयोजनं च प्रेक्षावद्विचा-रविषयं भवति इति जीवविषये संदेहाभावात् विचारफलाभावाच्च व्यर्थमेव 'तत्वमसि' अहं ब्रह्मास्मि इत्युपदेशसाहसम् । अत्र समाधानम् ।

'आत्मा वारे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्यः' । 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' इत्यादिश्रुतिभिः आत्मसाक्षात्कारस्य उपायाः प्रदर्श्यन्ते ।

सत्यं 'अहं सुखी, अहं दुःखी, अहं कर्ता' इति लोकानामनुभवः । ते यदि प्रमात्मकाः तदा श्रुतीनामुपदेशो व्यर्थ एव । परन्तु अपौरुषेयवेदेन 'अहं ब्रह्मास्मि' 'अयमात्मा ब्रह्म' इति प्रतिपादितम् । तत्र वेदस्य तात्पर्यं इति

मीमांसाविचारेण सिद्धम् । 'तत्तु समन्वयात्' इति सूत्रभाष्ये च सम्यग्विचारितम् । प्रत्यक्षस्य क्वचित्प्रमात्वं क्वचिच्चाप्रमात्वम् । श्रुतेस्तावन्निर्दुष्टत्वात् तज्जन्यो बोधः प्रमात्मक एव । प्रत्यक्षप्रमाणस्य ज्येष्ठत्वेऽपि तस्य प्रमोत्पादने न ज्येष्ठत्वम् । दोषयुक्तत्वसंभवात् । अतः वेदवाक्यस्य श्रुतेः प्रत्यक्षात् प्रबलत्वं । इति केवल-प्रमाणबलाबलविचारे कृतेऽपि 'अहं ब्रह्मास्मि' इत्यादिश्रुतिवाक्यात् प्रमात्मक एव बोधो भवेत् । ननु शतवारं श्रुत्वाऽपि श्रुतिवाक्यात् जाते बोधे 'अहं सुखी, दुःखी, कर्ता' इति लौकिको बोधः न निवर्तते इति प्रश्नः पुनरवशिष्ट एव । उच्यते । अयं लौकिको भ्रमः प्रत्यक्षात्मकः । प्रत्यक्षभ्रमनिवृत्तये प्रत्यक्षमेव ज्ञानं अपेक्ष्यते । 'अहं ब्रह्मास्मि' इत्यादिवाक्यात् अस्माकं नानादोषवतां शाब्दात्मकं ज्ञानं भवति इति तादृशभ्रमस्य न निवृत्तिः । 'यत्साक्षादपरोक्षात् ब्रह्म' इति ब्रह्म अपरोक्षमपि अस्ति । तस्यापरोक्षज्ञानार्थमेवोपरिनिर्दिष्टश्रुतीना-मवतारः । 'आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति विधिवाक्येभ्यः ज्ञानं विधिविषयं भवति इति भासते । तत्र ज्ञानं विधिविषयो भवति न वा इति विचार्यते ।

शब्देन प्रथमं परोक्षज्ञानं उत्पद्यते । अनंतरम् साक्षात्कारार्थं 'आत्मा वारे द्रष्टव्यः' इत्यादिवाक्यानि ब्रह्मप्रतिपत्तेर्विधिबोधकानि इति एकदेशिनः । (वैयासिकन्यायमाला) । तत्रेदं समाधानं श्रीविद्यारण्यमतेन । ज्ञानं न विधिविषयो भवति तदनर्हत्वात् । ज्ञानं वस्तुतन्त्रम् । विध्यर्थः क्रिया, सा च पुरुषतन्त्रा । सा पुरुषेण कर्तुं अकर्तुं अन्यथा कर्तुं वा शक्यते । ज्ञानं तावत् प्रमाणेनैव जन्यते

इति प्रमाणतन्त्रम् । यत् प्रमाणतंत्रं तदेव वस्तुतंत्रम् भवति । प्रमाणजन्यज्ञानार्थं वस्त्वपेक्षा वर्तते । अवस्तुनि प्रमाणगतिर्नास्ति इति ज्ञाने वस्तुतन्त्रम् प्रमाणतंत्रं चेति उच्यते । अग्नौ द्रव्यत्यागरूपक्रिया पुरुषजन्या इति सा पुरुषतंत्रा । तथा न ज्ञानम् । यथा घटप्रत्यक्षं प्रमाणसंबंधमात्रेणोत्पद्यते । पुरुषस्य ज्ञानोत्पत्त्यादौ संबन्धोऽस्ति स केवलं प्रमाणं वस्तून्मुखीकरणाय । तद्यथा अंतःकरणाद्वृत्तिः जायते, वृत्तेः संबंधः वस्तुनि, ततः ज्ञानं, इति पुरुषस्य ज्ञाने कारणत्वं नास्ति यथा क्रियाय वर्तते इति । विषयज्ञानं विषयगतचैतन्यप्रतिबिंबमेव इति ज्ञानस्य कुतः पुरुषतन्त्रत्वम् ? । 'आत्मा वारे द्रष्टव्यः' इत्यादिवाक्यानि न ज्ञानविध्यर्थानि अपि तु विधिच्छायानि । साक्षात्कारात् पूर्वं पराङ्मुखस्य मनसः विषयेभ्यो निवर्तनार्थानि । यथा दर्पणस्थं प्रतिबिंबं न पुरुषतंत्रं किंतु वस्तुतंत्रम् । पुरुषस्य प्रतिबिंबे कर्तृत्वं नास्ति । पुरुषस्य तत्रोपयोग एव न इति न । तस्य दर्पणसंमुखे मुखकरणाय दर्पणं वा मुखसंमुखे करणायोपयोगः । यथा कुलालपितुः घटे न उपयोगः इति न तस्य कुलालार्थे उपयोगः अतः न घटकारणत्वं, तथैव पुरुषस्य न ज्ञानकारणत्वम् । अपि तु उपयोगित्वम् ।

RANYA VIDYA HAMPI HOSPET

पञ्चदश्यां 'वाक्यमप्रतिबद्धं सत् प्राक् परोक्षावभासिते । करामलकवद्बोधं अपरोक्षं प्रसूयते' । वैयासिकन्यायमालायाम् 'प्र. अ प्रथमे पादे तृतीयाधिकरणे, 'तं त्वौपनिषदं पुरुषं पृच्छामि' इत्युद्धृत्य जीवब्रह्मैक्यज्ञानं, 'तत्त्वमसि, अहं ब्रह्मास्मि, अयमात्मा ब्रह्म' इत्यादिश्रुतिवाक्यैरेव जायते । तच्च साक्षात्कारात्मकं, तेनैव च प्रत्यक्षभ्रमनिराकरणात् । अत्र शब्दापरोक्षज्ञानं भवितुमर्हति

न वा इति विचार्यते। किमर्थं ज्ञानापेक्षा ? अज्ञाननाशाय ज्ञानापेक्षा। यद्विषयकाज्ञानं तद्विषयकमेव ज्ञानं अज्ञानं नाशयति। अज्ञानमूलको भ्रमः अपरोक्षश्चेत् तन्नाशार्थं अपरोक्षं ज्ञानं अपेक्ष्यते। अहं कर्ता, भोक्ता, सुखी, दुःखी इति भ्रमः प्रात्यक्षिको दृश्यते। तस्य निवर्तकं ज्ञानं प्रत्यक्षं अपेक्षते। नो चेत् चंद्रो महान् इति परोक्षज्ञानेन चंद्रः प्रादेशिक इति भ्रमो निवर्तेत, न निवर्तते इति सर्वेषामनुभवारूढम्। नाहं कर्ता नाहं भोक्ता किं तु सच्चिदानंदब्रह्मस्वरूपः इति प्रत्यक्षप्रमाज्ञानं आवश्यकम्। 'यत्साक्षादपरोक्षाद्ब्रह्म' इत्यादिश्रुत्यैव ब्रह्मणोऽपरोक्षत्वं कथितम्। अतो विचारावसरो वर्तते। श्रुत्या ब्रह्मणो निर्गुणनिर्विकारत्वमुक्तम्। तस्य इंद्रियजन्य प्रत्यक्षविषयत्वं तु न संभवति। शब्दस्य तु 'अत्यन्तमसत्यप्यर्थे शब्दः ज्ञानं करोति वै' इति न्यायेन शब्दात् ज्ञानं भवेत्, यथा 'तव माता वन्ध्या' इति वाक्यात् ज्ञानं भवत्येव, यतः वाक्यं श्रुतवतः पुरुषस्य क्रोधो जायते इति शब्दस्य इतरप्रमाणापेक्षया वैलक्षण्यम। तत्रापि उपरि निर्दिष्ट क्रोधजनकं यज्ज्ञानं 'तव माता वन्ध्या' इति वाक्याज्जातं तद् भ्रमात्मकं। तथापि प्रत्यक्षभ्रमात्मकमुत शाब्दभ्रमात्मकम् ? वह्निमान् ह्रदो वह्न्यभाववान् इति आहार्यं ज्ञानसदृशमेव इदम्। नैयायिकैः एतादृशशब्देभ्यः योग्यत्वाभावात् शाब्दोत्पत्तिर्न भवति इति मन्यते। इति परिशेषात् आहार्यं प्रत्यक्षमेव तदिति तेषां मते आयातम्। वेदान्तिमते तु तस्य 'शब्दज्ञानान्तःपातिवस्तुशून्यो विकल्पः इति शाब्दे अन्तर्भावः। अपि च 'दशमस्त्वमसि' इति वाक्यादपरोक्षं जायते। तस्यापरोक्षभ्रमनिवर्तकत्वात्। मनसस्तु स्वातन्त्र्येण ज्ञानजनकत्वं न

दृष्टम् । तस्य अन्येन्द्रियसहकारेणैव ज्ञानजनकत्वात् । सुखप्रत्यक्षं साक्षिप्रत्यक्षम् इति अहं 'ब्रह्मास्मि' इत्यादिमहावाक्यैः प्रत्यक्षज्ञानमेवोत्पद्यते । तेन च अहं कर्तेत्यादिप्रत्यक्षभ्रमस्य समूलसंसारदुःखस्य च निवृत्तिः परमानन्दावाप्तिश्च । एतेन अपरोक्षत्वं 'अहं ब्रह्मास्मि' इति वाक्यजन्यज्ञानावृत्ति वाक्यजन्यत्वात् चंद्रो महान् इति वाक्यजन्यबोधवत् इत्यनुमानमपि अद्वैतसिद्धिचित्सुखीत्यादिग्रन्थोक्तं निरस्तम् । व्यभिचारदोषेणानुमित्यजनकं इति ।

इदानीम् 'अहं ब्रह्मास्मि' इत्यादिवाक्यात् अज्ञाननिवृत्तिः परमानन्दावाप्तिश्च कस्य ? अंतःकरणावच्छिन्नचैतन्यस्य जीवस्य उत अन्तःकरणोपहितस्य साक्षिणः ? उच्यते । प्रथमं जीवसाक्षिणोः स्वरूपस्य विवेचनं क्रियते । अंतःकरणावच्छिन्नं चैतन्यं जीवः इत्यत्र अंतःकरणं विशेषणम् । यद्विशेषण तत् कार्यान्वयि । अहं घटं पश्यामि इत्यत्र दर्शनकार्ये अन्तःकरणविशिष्ट-जीवस्यान्वयः अहंशब्देन ज्ञायते । सर्वज्ञानानामनुसंधानार्थं एकं अंतःकरणा-वच्छिन्नं चैतन्यं जीवः अस्ति इति किमर्थं साक्षी अन्यः कल्प्यते ? उच्यते । अन्तःकरणावच्छिन्नस्य जीवस्य प्रमातुः जडविशिष्टत्वात् तस्य न स्वप्रकाशने सामर्थ्यम्, यथा जडस्य । इति त्रिपुटीप्रकाशनार्थं प्रमातृज्ञानार्थं वा साक्षी आव-श्यकः । तत्रापि साक्षिणि जीवोऽध्यस्तः । अयं तादात्म्याध्यासः । स्वयमहं गच्छामि इति व्यवहारो दृश्यते । तत्र स्वयमिति अधिष्ठानं, अहमिति अध्यस्तांशः । यथा इदं रजतं इत्यत्रेदमिति अधिष्ठानांशः, रजतमिति अध्यस्तांशः । इदमिति सामान्यांशः रजतमिति विशेषांशः । तथा अत्रापि स्वयमिति सामान्यांशः ।

सः स्वयं गच्छति, त्वं स्वयं गच्छसि, अहं स्वयं गच्छामि, इति लोकानुभवात् ।

अस्याध्यासस्य कारणं अविद्या एव । साक्षिणि अध्यस्तः जीवः अंतःकरणावच्छिन्नं चैतन्यं) सुखदुःखभाक् परलोकगामी चेति । अधिकं पञ्चदश्यादिंग्रंथेषु द्रष्टव्यं इति ।

ब्रह्मविदाशीर्वादात्मकस्य ग्रंथस्योत्तरभागे श्रीविद्यारण्यमुनीनां चरितं लिखितं इति नात्र लेखनस्य आवश्यकता इति तन्न लिख्यते ।

अस्मिन् निबंधे ' नीरक्षीरन्यायोऽवलंबयितव्यः इति विदुषामग्रे निवेद्य विरम्यते । इति शम् ।

पण्डित विद्याभूषणम् काशीनाथ शास्त्री जोषी,
अध्यक्षः,
श्रीमदाद्यशङ्कराचार्य-मन्दिरम्,
सतारा ।







THE CAVE OF PATALESVARA WHERE
SRI VIDYARANYA PERFORMED PENANCE

## विद्यारण्यविरचिताः ग्रन्थाः

माधवीयधातुवृत्तिः

जैमिनीय-न्यायमाला-विस्तरः

वैयासिक-न्यायमाला-विस्तरः

पराशरमाधवीयम्

मनुस्मृति-व्याख्या

स्मृतिसङ्ग्रहः

कुरुक्षेत्रमाहात्म्यम्

सूतसंहिता-अद्वैत-प्रकटन-पटीयसी-विशद-टीका

पुराणसारः

कालमाधवम्

माधवीय-ज्योतिषम्

तिथिनिर्णयः

लघुजातक-टीका

सूर्य-सिद्धान्त-टीका

## विद्यारण्यविरचिताः ग्रन्थाः

श्रीविद्यार्थ-दीपिका

सङ्गीतसारः

सर्वदर्शनसङ्ग्रहः

विवरणप्रमेयसङ्ग्रहः

पञ्चदशी

जीवन्मुक्तिविवेकः

अनुभूतिप्रकाशः

अपरोक्षानुभूति-टीका

ब्रह्मविदाशीर्वादः

बृहदारण्यक-वार्तिकसारः

ऐतरेयोपनिषद्दीपिका

कैवल्योपनिषद्दीपिका

तैत्तिरीयोपनिषद्दीपिका

नृसिंहोत्तरतापनीयोपनिषद्दीपिका

छान्दोग्योपनिषद्दीपिका

पुरुषार्थसुधानिधिः

VIDYARAṆYA — PROCESSION



( From an Old Painting in Virupaksha Temple )

— *By Courtesy of Directorate of Archaeology, Mysore.*

.................. सहैश्वर्यं सवाहनम् ।
विद्यारण्यगुरुस्वामी कैलासालयमाविशत् ॥

[Quoted by Mahamahopadhyaya Kokkandram Venkatratnam Pantulu, (Professor of Telugu, Presidency College, Madras), in his work-' Saṅkara Matha-Tatvaprakāsikārthā-Saṅgrahaḥ '— Printed at the Sanjivini Press, Peddunaickanpet, Madras—1877 - A. D.]

॥ श्रीः ॥

श्रीमत्परमहंसपरिव्राजकाचार्य

श्रीविद्यारण्यस्वामिविरचितः

# श्रीब्रह्मविदाशीर्वादः

हिरण्यगर्भादिस्थावरान्तेषु शरीरेषु यदेकं चैतन्यमस्ति, तदेवाहमस्मीति दृढज्ञानं निरन्तरं भूयात् ॥ १ ॥

निर्विकल्पसमाधिप्रतिबन्धकलयविक्षेपकषायरसास्वादेभ्यो रक्षितं मे चित्तमविघ्नेन ब्रह्मणि अवस्थितं भूयात् ॥ २ ॥

नित्यनिर्विकारासङ्गाद्वितीयपरिपूर्णसच्चिदानन्दस्वप्रकाशचिदेकरस-ब्रह्मानुभवसिद्धिर्भूयात् ॥ ३ ॥

अहमादिदृश्यविलक्षणास्मत्प्रत्ययालम्बनभूतप्रत्यक्चिन्मात्रस्वरूपा-नुभवसिद्धिर्भूयात् ॥ ४ ॥

सजातीयविजातीयस्वगतभेदरहिताखंडसच्चिदानन्दाद्वितीयब्रह्मा-त्मानुभवसिद्धिर्भूयात् ॥ ५ ॥

नित्यशुद्धबुद्धमुक्तसत्यपरमानन्दाद्वितीयब्रह्मात्मानुभवसिद्धिर्भूयात् ॥ ६ ॥

स्वगतादिभेदरहिताखण्डसच्चिदानन्दलक्षणब्रह्माभिन्नकूटस्थप्रत्यक्-स्वरूपः सर्वसाक्षीति चिद्रूपानुभवसिद्धिर्भूयात् ॥ ७ ॥

स्वात्मनोऽन्यत्वेन प्रतिभातं सकलं साक्ष्यं जगत् स्वाविद्या-विलसितत्वेन स्वानन्यत्वात् स्वात्ममात्रमिति, अद्वितीयब्रह्मात्मानुभव-सिद्धिर्भूयात् ॥ ८ ॥

असंभावनाविपरीतभावनारहितत्वेन करतलामलकवत् अहं ब्रह्मा-स्मीति अप्रतिबद्धापरोक्षब्रह्मसाक्षात्कारो दृढीभूयात् ॥ ९ ॥

यो ब्रह्मादिस्तम्बपर्यन्तानां सर्वेषां प्राणिनां देहमध्ये, तत्तद्देह-साक्षित्वेन भासमानः, परिपूर्णात्माऽस्ति, सोऽयं परमात्मा, केवलं मुमुक्षोः पुरुषस्य मे स्वरूपमित्येवंरूपात्मसाक्षात्कारो दृढीभूयात् ॥ १० ॥

वासनाक्षय - मनोनाश - तत्वज्ञानाभ्यासवशात्, ज्ञानरक्षा, तपःसिद्धिः, सर्वसमत्वं, दुःखनिवृत्तिः, सुखाविर्भावः इत्येतत्पञ्चप्रयोजन-सिद्धिर्भूयात् ॥ ११ ॥

मैत्री - करुणा - मुदितोपेक्षारूपसद्वासनापाटवेन रागादिदुर्वासना-क्षयः सम्यग्भूयात् ॥ १२ ॥

निरन्तरस्वात्मानुसंधानवशात् मनसो वृत्तिरूपपरिणामत्यागेन, निरुद्धताकारेण आत्मपरिणामो दृढीभूयात् ॥ १३ ॥

शमादिपूर्वकश्रवणमननिदिध्यासनाभ्यासबलात्, विषयासक्तिः, प्रज्ञामान्द्यं, विपर्ययः, दुराग्रहश्चेति वर्तमानप्रतिबन्धचतुष्टयनिवृत्तिद्वारा, अप्रतिबद्धापरोक्षब्रह्मसाक्षात्कारो दृढीभूयात् ॥ १४ ॥

उपक्रमादिषड्विधलिङ्गैः, अशेषवेदान्तानां अद्वैते ब्रह्मणि तात्पर्या-वधारणं दृढीभूयात् ॥ १५ ॥

श्रीगुरुमुखात् श्रुताद्वितीयवस्तुनः, वेदान्तानुगुणयुक्तिभिः अनवरत-मनुचिन्तनं भूयात् ॥ १६ ॥

विजातीयदेहादिप्रत्ययानन्तरित - सजातीयसच्चिदानन्दात्मप्रत्यय-प्रवाहो निरन्तरं भूयात् ॥ १७ ॥

असङ्गोऽहं, चिदात्माहमिति प्रत्यगात्मनि निवेशिते, वृत्तिरहिते, संस्कारशेषमात्रतया सूक्ष्मरूपेणावस्थिते चित्ते, आत्मनः स्वरूपभूत-परमानन्दो निरन्तरं सम्यगाविर्भूयात् ॥ १८ ॥

अहमात्मा साक्षी, केवलः, चिन्मात्रस्वरूपः; नाज्ञानं; नापि तत्कार्यं; किंतु, नित्यशुद्धबुद्धमुक्तसत्यपरमानन्दाद्वयं ब्रह्मैवाहमस्मीति अभेदेनावस्थानं समाधिः; तत्र च अन्तस्समाधिना दृग्दृश्यविवेके, बहिस्समाधिना ब्रह्मसर्गविवेके च दृढे जाते, तेन विवेकद्वयेनायं गलितदेहाभिमानः, विज्ञातपरमात्मतत्त्वश्च भूयात् ॥ १९ ॥

देहाद्बहिः सकलनामरूपात्मकेषु वस्तुष्वपि, सर्पधारादिषु रज्जुरिव व्याप्तः, सच्चिदानन्दलक्षणो यः परमात्मा, स एव परशब्देनोच्यते। अन्तः अहमादिदृश्यविलक्षणः, अस्मत्प्रत्ययालम्बनभूतः, प्रत्यक्चिन्मात्रस्वरूपः, यः साक्ष्याख्यो जीवात्मा, स एव अवरशब्देनोच्यते। परश्चासौ अवरश्चेति परावरः, प्रत्यगभिन्नः परमात्मा। तस्मिन् एवं अन्तर्बहिश्च पररूपेण अवररूपेण च अवस्थिते, परमार्थतः परावरविभागरहिते प्रत्यगभिन्ने परावरे ब्रह्मणि 'त्वं वा अहमस्मि भगवो देवते; अहं वै त्वमसि' इति श्रुत्यनुसारेण 'अहं ब्रह्मास्मि, ब्रह्मैवाहमस्मि' इति व्यतिहारेण, अखण्डैकरसत्वेन साक्षात्कृते सति, तेन परावरब्रह्मसाक्षात्कारेण, अस्य परावरब्रह्म साक्षात्कृतवतो मम हृदयग्रन्थिभेद - सर्वसंशयनिवृत्ति-सर्वकर्मक्षयरूपपरमपुरुषार्थः सम्यगाविर्भूयात् ॥ २० ॥

अहंकारात्मनोः एकत्वभ्रमनिवृत्तिरूपोऽयं ग्रन्थिभेदः दृढीभूयात् ॥ २१ ॥

आत्मा देहादिव्यतिरिक्तो वा न वा, व्यतिरिक्तत्वेऽपि, कर्तृत्वादिधर्मयोगी वा न वा, अकर्तृत्वेऽपि, तस्य ब्रह्मणा भेदोऽस्ति वा न वा, अभेदेपि, तज्ज्ञानं कर्मादिसहितं वा मुक्तिसाधनं केवलं वा, तथापि, आत्मा साक्षी वा कर्ता वा, साक्षित्वेपि अस्य ब्रह्मत्वमस्ति वा न वा,

ब्रह्मत्वे सत्यपि, तद्बुध्या वेदितुं शक्यते वा न वा, शक्यत्वेऽपि, तद्वेदनमात्रेण मुक्तिरस्ति वा न वा, मम परमार्थतः ब्रह्मत्वे सत्यपि तादृग्रूपं साक्षात्कृतं वा न वा, साक्षात्कृतेऽपि, इतः परं कर्तव्यमस्ति वा न वा, कर्तव्याभावेऽपि, इदानीं मम जीवन्मुक्तिरस्ति वा न वा, जीवन्मुक्तत्वेऽपि, वर्तमानदेहपातानन्तरं विदेहमुक्तिः भविष्यति वा न वा, तत्प्राप्तावपि, कालान्तरे पुनर्जन्म भविष्यति वा न वा, इत्यादि-सर्वसंशयनिवृत्तिर्भूयात् ॥ २२ ॥

अनारब्धानां आगामिजन्महेतूनां अनेककोटिजन्मार्जितानां प्रारब्धव्यतिरिक्तानां संचितकर्मणां निवृत्तिरूपः परमपुरुषार्थः सम्यगाविर्भूयात् ॥ २३ ॥

यः पूर्णानन्दैकबोधः तद्ब्रह्माहमस्मीति ब्रह्मात्मानुभवमात्रपर्यवसाने बुद्धिर्निरन्तरं भूयात् ॥ २४ ॥

यस्मिन् काले द्वैतभानं नास्ति, निद्राऽपि नागच्छति, तस्मिन् काले उपलभ्यमानं यत्सुखमस्ति स ब्रह्मानन्द इति ब्रह्मात्मानुभवसिद्धिः निरन्तरं भूयात् ॥ २५ ॥

मनोव्यापाराभावसमये यत्सुखं भासते, तत् सुखमात्मस्वरूपमिति आत्मनिश्चयः सम्यग्भूयात् ॥ २६ ॥

स्वप्नः स्वातिरेकेण यथा नास्ति, तथैव स्वजाग्रदपि स्वातिरेकेण नास्ति ; तेन अद्वितीयात्मानुभवसिद्धिः सम्यग्भूयात् ॥ २७ ॥

वासनाक्षयमनोनाशाभ्यां निर्वासने वृत्तिशून्ये चित्ते, संशयविपर्ययदोषद्वयाभावेन उत्पन्नं ब्रह्मज्ञानं अबाधितत्वेन सुरक्षितं भूयात् ॥ २८ ॥

पञ्चम्यादिभूमित्रयरूपायां जीवन्मुक्तौ संपाद्यमानायां द्वैतभानाभावेन संशयविपर्ययप्रसङ्गाभावात् उत्पन्नं तत्त्वज्ञानं अबाधितत्वेन सुरक्षितं भूयात् ॥ २९ ॥

स्वप्ने स्थूलशरीराभावेऽपि, सुषुप्तौ सूक्ष्मशरीराभावेऽपि, समाधौ कारणशरीराभावेऽपि, जाग्रदाद्यवस्थाचतुष्टयेऽपि यः चिद्रूपात्मा मणिषु सूत्रमिव अनुस्यूततया निरन्तरं भासते, स चिद्रूपात्मैव अहमस्मीति अन्वयव्यतिरेकाभ्यां शरीरत्रयव्यावृत्तिं तत्साक्षिचैतन्यस्यानुवृत्तिं च पश्यतो मम शरीरत्रयव्यतिरिक्तात्मानुभवः सम्यग्भूयात् ॥ ३० ॥

भगवन्तं परमेश्वरं प्रीतिपूर्वकं भजतो ममोपरि अनुग्रहार्थं भगवान् वासुदेवः आत्मभावस्थः सन्, विवेकप्रत्ययरूपेण, भक्तिप्रसादस्नेहयुक्तेन, तद्भावनाभिनिवेशवातेरितेन, ब्रह्मचर्यादिसाधनसंस्कारवत्प्रज्ञावर्तिना, विरक्तान्तःकरणाधारेण, विषयव्यावृत्तरागद्वेषाकलुषितचित्तनिवातापवरकस्थेन, नित्यप्रवृत्तैकाग्रयध्यानजनितसम्यग्दर्शनभास्वता ज्ञानदीपेन अज्ञानजं अविवेकतो जातं मिथ्याप्रत्ययरूपं मोहान्धकारं तमो नाशयत्वित्याशीः निरन्तरं भूयात् ॥ ३१ ॥

परमेश्वरं प्रीतिपूर्वकं भजन्तो भक्ता येनानन्यबुद्धियोगेन सम्यग्दर्शनलक्षणेन भगवन्तं परमेश्वरं आत्मत्वेन उपयान्ति प्रतिपद्यन्ते, तं बुद्धियोगं भगवान् वासुदेवः मे ददातु इति आशीर्निरन्तरं भूयात् ॥ ३२ ॥

विकारमन्तरेण स्वाध्यस्तं सर्वं साक्षादव्यवधानेन स्वरूपबोधेन ईक्षते पश्यतीति साक्ष्यनुभवसिद्धिः सम्यग्भूयात् ॥ ३३ ॥

देहेन्द्रियादिसकलजडावभासकत्वेन आत्मा चिद्रूप इति चिदात्मानुभवसिद्धिः सम्यग्भूयात् ॥ ३४ ॥

आत्मनि कदाचिदपि अप्रियाभावेन, परमप्रेमास्पदत्वेन च, आत्मा परमानन्दरूप इति, आनन्दानुभवसिद्धिः सम्यग्भूयात् ॥ ३५ ॥

अभारूपस्य विश्वस्य भानं, भासकसन्निधिं विना कदाचिदपि न संभवतीति, भारूपात्मा सर्वगत इति सर्वगतात्मानुभवसिद्धिः सम्यग्भूयात् ॥ ३६ ॥

असज्जडदुःखात्मकाहंकारादिभ्यो विलक्षणतया, प्रातिकूल्येन सत्यज्ञानानन्दरूपेण अञ्चति, प्रकाशत इति, प्रत्यगात्मानुभवसिद्धिः सम्यग्भूयात् ॥ ३७ ॥

पश्चाद्भासमानस्य जडस्य, प्रथमतो भासमानं चैतन्यमेव वास्तवं स्वरूपमिति निश्चित्य, जडमुपेक्ष्य, चिन्मात्रमेव चित्तं निरन्तरं सम्यग्भूयात् ॥ ३८ ॥

'सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति' इति वाक्येन देहेन्द्रियादिसाक्षिरूपं यत् प्रज्ञानं त्वंपदार्थरूपं निर्णीतं, तदेव 'एष ब्रह्म' इत्यादिवाक्येन जगत्कारणतया निर्णीतं परं ब्रह्म, न चानयोरीषदपि भेदोऽस्ति इति, ऐतरेयमहावाक्यज्ञानसिद्धिः निरन्तरं भूयात् ॥ ३९ ॥

यतः, सर्वत्रावस्थितं प्रज्ञानं ब्रह्म, अतो मयि अवस्थितं प्रज्ञानं ब्रह्म, प्रज्ञानत्वाविशेषात् इति ऐतरेयमहावाक्योत्थितजीवब्रह्मैक्यज्ञानसिद्धिः निरन्तरं भूयात् ॥ ४० ॥

आत्मसन्निधौ विद्यमानत्वेन, जडरूपस्यापि देहेन्द्रियादेः चेतनत्वेन भासमानत्वात्, आत्मा चिद्रूप इति चिदात्मानुभवसिद्धिः सम्यग्भूयात् ॥ ४१ ॥

आत्मसहितत्वेन, दुःखात्मकस्य देहादेरपि प्रियतमत्वात् , आत्मा परमानन्दरूप इति, आनन्दात्मानुभवसिद्धिः सम्यग्भूयात् ॥ ४२ ॥

देशतः, कालतः, वस्तुतः, परिच्छेदरहिताद्वितीयात्मानुभवसिद्धिः सम्यग्भूयात् ॥ ४३ ॥

पूर्वापरपरामर्शमन्तरेण सहसोत्पद्यमानस्य क्रोधादिवृत्तिविशेषस्य हेतोः चित्तसंस्कारस्य, विवेकजन्यायां क्षान्त्यादिवासनायां दृढायां सत्यां विनाशात् , बाह्यनिमित्ताभावेन क्रोधाद्यनुत्पत्तिः सम्यग्भूयात् ॥

"यस्य प्रसादादहमेव विष्णुः, मय्येव सकलं परिकल्पितं चे"ति, आत्मस्वरूपं विजानामि, तस्य पादारविन्दयोः अचञ्चला भक्तिः निरन्तरं सम्यग्भूयात् ॥ ४५ ॥

अचिद्रूपस्य जगतः चित्सन्निधेर्विद्यमानत्वात् , चिद्रूपात्मा सर्वगत इति सर्वगतात्मानुभवसिद्धिः सम्यग्भूयात् ॥ ४६ ॥

सर्वार्थसाधकत्वहेतुना, सर्वसंबन्धेन च आत्मा परिपूर्ण इति परिपूर्णात्मानुभवः सम्यग्भूयात् ॥ ४७ ॥

देशकालाव्यवहितत्वेन परोक्षहेतोरभावात् , साधनान्तरनिरपेक्षतया स्वयंप्रकाशमानः चिदात्मा सर्वदा स्वतस्सिद्धापरोक्ष इति अपरोक्षानुभवसिद्धिः सम्यग्भूयात् ॥ ४८ ॥

यत्र यद्वस्तु अस्तीति ईक्षते, तेन वस्तुना अन्यत्र अनन्वागतत्वेन आत्मा असंग इति, असंगात्मानुभवः सम्यग्भूयात् ॥ ४९ ॥

निरवयवत्वेन असंगत्वेन च, आत्मनः केनापि संबन्धाभावात् , आत्मा नित्यमुक्त इति, नित्यमुक्तस्वरूपानुभवः सम्यग्भूयात् ॥ ५० ॥

अवेद्यत्वे सति अपरोक्षव्यवहारयोग्यत्वात्, आत्मा स्वयंप्रकाश इति स्वयंप्रकाशात्मानुभवः सम्यग्भूयात् ॥ ५१ ॥

साधनान्तरनिरपेक्षतया स्वयमेव भासमानत्वात्, आत्मा स्वयंप्रकाश इति स्वयंप्रकाशात्मानुभवः सम्यग्भूयात् ॥ ५२ ॥

इदं सर्वं आत्मनि प्रतीयमानं यत् रूपरसादिकं जगत् मायामयं, न त्वेतत् वस्तुतोऽस्तीति तत्वनिश्चयो दृढीभूयात् ॥ ५३ ॥

इति श्रीमत्परमहंसपरिव्राजक श्रीविद्यारण्यस्वामिविरचितः

ब्रह्मविदाशीर्वादः संपूर्णः ॥

---

साम्राज्यवेदवेदान्तैः धर्मकामार्थमोक्षदम् ।
विद्यारण्यन्नुमः पुण्यं योऽविद्यारण्यमच्छिनत् ॥